मङ्गलाचरणम्

श्री गणेशाय नमः ॥

श्रीगुरुभ्यो नमः ॥

स जयति सिन्धुरवदनो देवो यत्पादपङ्कजस्मरणम् ।
वासरमणिरिव तमसां राशिं नाशयति विऽघ्नानाम् ॥ १॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लंबोदरश्च विकटो  विघ्ननाशो गणाधिपः ॥ २॥

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ ३॥

विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।
सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ४॥

शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वाविघ्नोपशान्तये ॥ ५॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ६॥

व्यासाय विष्णुरूपाय व्यासरूपाय  विष्णवे ।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ ७॥

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शंभुर्भगवान् बादरायणः ॥ ८॥

इति मङ्गलाचरणं सम्पूर्णम् ॥